कटी । बह्वृची । जातेः किम्? मुण्डा । अस्त्रीविषयात्किम्? बला । अयोपधात्किम्? क्षत्रिया ॥ *हय गवयमुकयमनुष्यमत्स्यानामप्रतिषेधः [वा २४९५] योपधप्रतिषेधे—हयी । गवयी । मुकयी । 'हलस्तद्धितस्य' इति यलोपः । मनुषी ॥ *मत्स्यस्य ङ्याम् [वा ४१९८] यलोपः । मत्सी ॥ **इतो मनुष्यजातेः** ४-१-६५ ङीप् । दाक्षी ॥ **ऊङुतः** ४-१-६६ उदन्तादयोपधान्मनुष्यवाचिनः स्त्रियामूङ् । कुरूः । अयोपधात्किम्? अध्वर्युर्ब्राह्मणी ॥ **पङ्गोश्च** ४-१-६८ पङ्गूः ॥ *श्वशुरस्योकाराकारलोपश्च [वा ५०३९] श्वश्रूः ॥ **ऊरूत्तरपदादौपम्ये** ४-१-६९ उपमानवाचि पूर्वपदमूरूत्तरपदं यत् प्रातिपदिकं तस्मादूङ् । करभोरूः ॥ **संहितशफलक्षणवामादेश्च** ४-१-७० अनौपम्यार्थं सूत्रं । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ॥ **शार्ङ्गरवाद्यञो ङीन्** ४-१-७३ शार्ङ्गरवादेर्यञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् । शार्ङ्गरवी । बैदी । ब्राह्मणी ॥ **नृनरयोर्वृद्धिश्च** [गण ५४] नारी ॥ **यूनस्तिः** ४-१-७७ युवन्शब्दात् स्त्रियां तिस्स्यात् । युवतिः ॥

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥

---

शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ।
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥

॥ इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥



Printed by
V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.—1937.